झेर्जुस् स्यात् । ज इत् । २२१४ उस्यपदान्तात् ६।१।९६॥ अपदान्तादवर्णा दुसि परे पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वान्नित्यत्वाच्च 'अतो येयः' (सू २२१२) इति प्राप्तः । यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यम्, तथापि 'यास' इत्येतस्य इय इति व्याख्येयम् । एवं च सलोपस्यापवाद इय । 'अतो येयः' (सू २२१२) इत्यत्र सन्निपातार्थं । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव ।

झेर्जुस् । लिङः सीयुडित्यतो लिङ इत्यनुवर्तते । तदाह—लिङो झेरिति । अनेकाल्त्वात्सर्वादेशः । ज इदिति । जुसः स्थानिवत्त्वेन प्रत्ययत्वात् चुटू इति जकार इत्संज्ञक इत्यर्थः ॥ उसि शपि गुणे अवादेशे यासुटि सकारलोपे भव या उसिति स्थिते इयादेशं बाधित्वा पररूपप्रवृत्तिं शङ्कितुमाह—उस्यप । एङः पूर्वपरयोरित्यधिकृतम् । आद्गुण इत्यस्मादा दित्यनुवर्तते । 'एङि पररूप'मित्यस्मात्पररूपमिति । तदाह—अपदान्तादिति । उसीति । उसि च अच उकारे तस्मिन् परत इत्यर्थः । 'इको यणचि' इत्यतः अचीत्यनुवृत्तेः । यद्यपि उस इत्यस्याकारस्य च उसीत्येकादेशेऽपि रूपं तुल्यम् । तथापि 'अकः सवर्णे दीर्घः' इत्यादावुत्तरत्राचीत्यावश्यकमत्राप्यनुवर्तत इति बोध्यम् । भिन्द्युरित्याद्युदाहरणम् । इति प्राप्ते इति । अत्र उसित्यकारस्योकारस्य चाद्गुणं बाधित्वा एकस्मिन्नुकारे पररूपे प्राप्ते सतीत्यर्थः । सति च पररूपे या इत्यस्याऽभावात् इय् न स्यादिति मन्यते—परत्वादिति । पररूपापेक्षया इयादेशः परः नित्यश्च, अकृते कृते च प्रसक्तेः । कृते पररूपे य् इत्यस्यैकदेशविकृतन्यायेन यकारादेशस्य पूर्वं तदवस्थेन वा इयादेशस्य निर्बाधत्वात् । ततश्च पररूपं बाधित्वा इयादेशे भवेयुरिति रूपमिति प्राचीना मन्यन्त इत्यर्थः । ननु पररूपमङ्गाधिकारस्थत्वाऽभावात् अङ्गानपेक्षत्वात् अन्तरङ्गम्, इयादेशस्तु आङ्गत्वात् प्रकृतिप्रत्ययोभयसापेक्षत्वात् बहिरङ्गः । ततश्च परान्नित्याच्च प्रवृत्तादियादेशात् पररूपस्यान्तरङ्गतया बलवत्त्वात् पररूपमेव इह स्यादिति शङ्कते—यद्यपीति । परिहरति—तथापीति । अत यास इय इति पदच्छेदः । यासिति लुप्तषष्ठीकं पदम् । ततश्च अतः परस्य यासित्येतस्य इय् स्यादिति व्याख्येयमित्यर्थः । ननु 'लिङः सलोपोऽनन्त्यस्ये'ति सकारस्य लोपः इयादेशं बाधित्वा नित्यत्वात् प्राप्नोतीति, ततश्च यास् इत्यस्य इय् इति कथमित्यत आह—एवं चेति । यासिति सकारान्तस्य इयादेशविधिसामर्थ्यादेव सकारलोपं बाधित्वा प्रागेव यासिति सकारान्तस्य इयादेशो भवतीत्यर्थः । तथा च सकारावस्थायां अजादिपरत्वाभावेन पररूपस्याप्रवृत्तिरिति भावः । ननु यदि 'यास् इय' इति विच्छेदः, तदा सकारस्य रुत्वे, भोभगो इति यत्वे, 'लोपः शाकल्यस्ये'ति तस्य लोपे अतो या इय इति स्यात् । आद्गुणे कृते यलोपस्याऽसिद्धत्वादित्यत आह—सन्निपातार्थ इति । 'आने मुगि'ति सूत्रे भाष्ये तु अतो या इय इत्येव सूत्रपाठो दृश्यते । भवेयुरिति । लिप्, शप्, गुणः । अवादेशः । इतश्चेति इकारलोपः । यासुडागमः । सकारस्य लोपः । इयादेशः । आद्गुणः यलोपः । इत्यवि

भवेम। २२१५ लिङाशिषि ३।४।११६॥ आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात्। २२१६ किदाशिषि ३।४।१०४॥ आशिषि लिङो यासुट् कित्स्यात्। 'स्कोः' (५ ३८०) इति सलोपः। २२१७ क्ङिति च १।१।५॥ गित्किन्ङिन्नि-

सर्गौ। एवं थसः तमादेशे थस्य तादेशे च, भवेतम्। भवेत इति च रूपम्। भवेयमिति। मिपि अमादेशः। शप्। गुणः। अवादेशः यासुट्। सलोपः। इयादेशः। आद्गुणः। भवेवेति। वस्। शप्। गुणावादेशौ। 'नित्यं ङितः' इति सकारलोपः। यासुट्। सलोपः। इयादेशः। आद्गुणः। यलोपः। एवं मसि भवेमेति रूपम्। इति विधिलिङ्प्रक्रिया। अथाशीर्लिङि विशेषमाह—लिङाशिषि। लिङिति लुप्तषष्ठीकं पदम्। 'तिङ्शित्सार्वधातुकमि'त्यतस्तिङित्यनुवर्तते। तदाह—आशिषि लिङस्तिङिति। सार्वधातुकसंज्ञापवादोऽयम्। ततश्च सार्वधातुकसंज्ञाकार्यं शबादि न भवति। किदाशिषि। लिङस्तस्थेत्यतः लिङ इत्यनुवर्तते। 'यासुट् परस्मैपदेष्वि'त्यतः यासुडिति च। तदाह—आशिषि लिङ इति। 'यासुट् परस्मैपदेषि'ति ङित्त्वस्यापवादः। यद्यपि ङित्त्वेनैव गुणनिषेधः सिध्यति। तथापि 'इज्यादि'त्यादौ 'वचिस्वपियजादीनां किती'ति सम्प्रसारणार्थं कित्त्वमावश्यकम्, इह व्याख्यानादुपन्यस्तम्। अथ आशिषि लिङस्तिपि आर्धधातुकत्वात् शबभावे 'इतश्चे'तीकारलोपे अनुबन्धलोपे अतः परस्मिन्नभावात् सार्वधातुकत्वाभावाच्च इयादेशाभावे सुटि भूयास् स् त् इति स्थिते प्रक्रियामाह—स्कोरिति सलोप इति। 'लिङस्सलोप' इत्यस्य सार्वधातुकविषयत्वात् स्कोरिति सुटः पदान्तसंयोगादित्वाल्लोपः। ततः यासुटः सस्यापि पदान्तसंयोगादित्वादेव लोपः। ननु झलपरसंयोगादित्वेन यासुटः सस्य लोपे सुटः सस्य पदान्तसंयोगादित्वाल्लोप इति युक्तम्। तथा सति झलपरसंयोगादिलोपस्यासिद्धत्वेन संयोगान्तलोपापत्तेः। अत इहापाद्? सावकाशत्वात् झलपरसंयोगादिलोपस्य संयोगान्तलोपाऽबाधकत्वादिति शब्देन्दुशेखरे विस्तरः। एवं च भूयास् स त् इति स्थिते सकारद्वयस्य निवृत्तौ भूयादिति रूपम्। अत्र 'सार्वधातुकार्धधातुकयो'रिति गुणे प्राप्ते। क्ङिति च। गश्च क्श्च ङश्च क्ङः, समाहारद्वन्द्वः, कात्पूर्वं गकारस्य चर्त्वेन निर्देशात् क्ङ् च इत् यस्येति विग्रहः। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमन्वेति। तथा च गिति किति ङिति चेति लभ्यते। निमित्तसप्तम्येषा। 'इको गुणवृद्धी' इत्यनुवर्तते। चकार इत्यर्थे। इक इत्युच्चार्य विहिते इति लभ्यते। 'न धातुलोप आर्धधातुके' इत्यतः नेत्यनुवर्तते। तदाह—गित्किन्ङिन्निमित्ते इत्यादिना। गितीत्युक्तौ तु 'ग्लाजिस्थश्च ग्स्नु'रिति ग्स्नुप्रत्यये 'जिष्णु'रित्यत्र गुणनिषेधो न स्यात्। 'न च ग्स्नुप्रत्ययः किदेव क्रियतामिति वाच्यम्। तथा सति 'घुमास्थे'ति किति विहितस्य ईत्वस्य प्रसङ्गात्। यदि तु गिति किति ङिति परतो गुणवृद्धी न स्त इति व्याख्यायेत, तदा छिन्नं भिन्नमित्यत्र क्तप्रत्यये परे लघूपधगुणनिषेधो न स्यात्। स्थानिभूतस्येकः हला व्यवधानात्। न च येन नाव्यवधानन्यायः शङ्क्यः।

कित्त्वे इग्लक्षणे गुणवृद्धी न स्तः। भूयात्। भूयास्ताम्। भूयासुः। भूयाः। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म। २२१८ लुङ् ३।२।११०॥ भूतार्थवृत्तेर्धातोर्लुङ् स्यात्। २२१९ माङि लुङ् ३।३।१७५॥ सर्वलकारापवादः। २२२० स्मोत्तरे लङ् च ३।३।१७६॥ स्मोत्तरे माङि लङ् स्याल्लुङ् च। २२२१ च्लि लुङि ३।१।४३॥ शबाद्यपवादः। २२२२ च्लेः सिच् ३।१।४४॥ इचावितौ। २२२३ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७॥ एभ्य सिचो

कित् स्युतमित्याद्यावश्यकत्वे चरितार्थत्वात्। यदि च 'क्ङिति च' इत्येव अत्र व्याप्येत न त्विग्लक्षणे इति, तदा शिगोरपत्यं शैगवायनः, नडादित्वात् फक्, इह आदिवृद्धेरगुणस्य च वस्तुगत्या इक्स्थानिकत्वात् निषेधः स्यादित्यलम्। भूयादिति। इहार्धधातुकत्वाद्विलङ् सलोप इत्यस्याऽप्रवृत्तेः स्कोरिति सलोप इत्युक्तं न विस्मर्तव्यम्। न चैवमपि संयोगादिलोपस्यासिद्धत्वाद्वलाद्यादिलोपः स्यादिति वाच्यम्। सुटि यासुटि च सति तात्कर्षं विशिष्टस्यैव प्रत्ययत्वेनाऽपृक्तत्वाभावादित्यलम्। भूयास्तामिति। आशिषि लिङस्तसस्तामादेशे आर्धधातुकत्वात् शबभावे यासुडागमे अतः परत्वाऽभावादियादेशाऽभावे सुटि तस्य स्कोः संयोगादिरित्येव यासुटः सकारस्य लोपः गुणनिषेधश्च। भूयासुरिति। झेर्जुसि यासुडागमे गुणनिषेधे रूपम्। भूया इति। आशीर्लिङः सिपि इतश्चेतीकारलोपः। यासुटः स्कोरिति सलोपः, गुणनिषेधः, रुत्वविसर्गौ। भूयास्तमिति। थसस्तमादेशे यासुटि गुणनिषेधः। एवं थस्य तादेशेऽपि भूयास्तेति रूपम्। भूयासमिति। मिपः अमादेशे यासुटि गुणनिषेधः। भूयास्वेति। लिङो वस्। 'नित्यं ङितः' इति सकारलोपः। यासुट्। गुणनिषेधः। एवं मसि भूयास्मेति रूपम्। इत्याशीर्लिङ्प्रक्रिया। लुङ्। धातोरिति भूत इति चाधिकृतम्। तदाह—भूतार्थवृत्तेरिति। माङि लुङ्। माङि प्रयुज्यमाने धातोर्लुङ् स्यादित्यर्थः। ननु लुङ् इत्युदाहृतसूत्रेणैव सिद्धेः किमर्थमिदमित्यत आह—सर्वलकारापवाद इति। माङित्यत्राद्यो ङ् मा इत्यव्ययान्तरं प्रतिषेधार्थकमित्याहुः। 'आङ्माङोश्च' इति सूत्रभाष्ये [illegible] ङितो माङ्शब्दस्य निर्देशात् प्रमाद्यन्द इत्यत्र तुक् न भवतीत्युक्तम्। माशब्दस्याऽव्ययान्तरस्य सत्त्वे [illegible] सदेवोदाहृतेन। माङित्यत्र तु अस्त्येव विभक्तिप्रतिरूपकमव्ययमित्यन्ये। स्मोत्तरे लङ् च। चकारात् माङि लुङित्यनुवृत्यते। स्म इत्यव्ययं उत्तरं यस्मादिति विग्रहः। तदाह—स्मोत्तरे माङीति। अयमपि सर्वलकारापवादः। च्लि लुङि। च्लि इति लुप्तप्रथमाकम्। लुङि परे धातोः च्लिप्रत्ययः स्यादित्यर्थः। शबाद्यपवाद इति। आदिना श्यनादिविकरणसङ्ग्रहः। च्लेः सिच्। इचाविति। सिच इत्त्वस्य प्रयोजनम्। इदित्त्वस्य तु अमंस्तेत्यत्र 'अनिदितां हल उपधायाः' इत्युपधालोपस्याऽप्रवृत्तिः प्रयोजनम्। गातिस्था। गाति स्था घु पा भू एषां द्वन्द्वात् पञ्चमीबहुवचनम्। परस्येति शेषः। सिच इति षष्ठी। गातीति श्तिपा निर्देशात्

लुक् स्यात्। गातिविशेषणादेशविधौ गृह्येते। २२२४ भूसुवोस्तिङि ७।३।८८ भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात्। २२२५ अस्तिसिचोऽपृक्ते ७।३।९६॥ सिच्च अस् चेति समाहारद्वन्द्वः। सिच्छब्दस्य सौत्रं सत्वम्। अस्तीत्यव्ययेन कर्मधारयः। तत्र पञ्चम्याः सौत्रो लुक्। विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात्। इति ईट् नेह, सिचो लुका लुप्तत्वात्। अभूत्।

मात्राबोधार्थं ग्रहणम्। घु इत्यनेन 'दाधाघ्वदाबि'ति घुसंज्ञकयोः दाधातोर्धाधातोश्च ग्रहणम्। 'पचपञ्चविधार्थं'जितो भूमि लुगाणिनो निरवसानुवर्तितादपि लुगित्यनुवर्तते। 'जुहोत्यादिभ्यः श्लुः'रित्यव्यवहितमपि श्लुग्रहणं नानुवर्तते। व्याख्यानात्। तदाह—एभ्य सिच इत्यादिना। गापाविति। इह गातिस्थेति, सूत्रे गातीत्यनेन पाग्रहणेन च इणो गा लुङीति लुग्विकरणस्येणो गादेशः, अविकरणस्य पिबादेशयोश्च पाधातुश्च गृह्येते इत्यर्थः। 'गापोर्ग्रहणे इणपिबत्योर्ग्रहण'मिति भाष्यादिति भावः। तदा च लुङि सिचादेशे इतरथैव इकारलोपे अपवादे किङ्प्रत्यये तस्य सिचि तस्य लुकि अडागमे अभू त् इति स्थिते पिदनात् ङित्त्वाऽभाव 'सार्वधातुकार्धधातुकयो'रिति गुणे प्राप्ते—भूसुवोस्तिङि। 'मिदेर्गुणः' इत्यतो गुण इति, 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यतो नेति सार्वधातुक इति चानुवर्तते। तदाह—एतयोरिति। भू सू इत्यनयोरित्यर्थः। इह 'षूङ् प्राणिगर्भविमोचने' इति लुग्विकरणस्यैव ग्रहणम्। न तु सुवतिसूयत्योः शविक श्यन्विकरणयोरपि। तत्र तिङो विशेषणे व्यवधानात्। अथ अभूत् इत्यत्र तकारस्येडागमं साधयितुमाह—अस्तिसिचोऽपृक्ते। अस्तिश्च सिच्चेति समाहारद्वन्द्वात् पञ्चमी। 'भुव ईडि'त्यत ईडित्यनुवर्तते। 'तस्मादित्युत्तरस्ये'ति परिभाषया 'अस्ति सिच' इति पञ्चमी अपृक्तस्येति षष्ठीं प्रकल्पयति। ततश्च अस्ते सिचश्च परस्य पृक्तस्य ईडागम स्यादिति प्राचीना व्याचक्षते। तथा सति लुङि अस्तेर्भूभावे अभू दिति न स्यात्। भूभावस्य स्थानिवत्त्वेन अस्तितया तत्परापृक्तस्य हल ईडागमस्य दुर्वारत्वात्। तथा अगात्, अस्थात्, अपादित्यादावपि 'गातिस्थे'ति सिचो लुकः स्थानिवत्त्वेन सिच परत्वादीडागमः स्यात्। अतः प्रकारान्तरेण व्याचष्टे—सिच्च अस् चेत्यादिना। ननु सिचसशब्दे सिच्छब्दस्य पूर्वखण्डस्यान्तर्वर्तिविभक्त्या पदत्वाच्चोः कुरिति कुत्वप्रसङ्ग इत्यत आह—सिच्छब्दस्य सौत्रं सत्वमिति। तथा च म त्वेन पदत्वस्य बाधात् कुत्वमिति भावः। ननु सिचसशब्दे अस् इत्यनेनैवास्तेर्लाभात् अस्तिग्रहणं किमर्थमित्यत आह—अस्तीत्यव्ययेन कर्मधारय इति। अस्तीति वि-भक्तिप्रतिरूपकमव्ययं लुप्तप्रथमाविभक्तिकं विद्यमानार्थकम्। तेन सिचस्शब्देन कर्मधारय इत्यर्थः। तथा च अस्तिसिचस् इत्येकं पदमिति स्थितम्। तत्र पञ्चम्याः सौत्रो लुगिति। 'सुपां सुलुगित्यनेने'ति शेषः। तथा च अस्तिसिच इति पदं तदर्थमाह—विद्यमानात्सिचोऽस्तेश्च परस्येति। हल इति। 'उतो वृद्धिर्लुकि हलीत्यतोऽनुवृ-

हलः किम्। ऐधिषि। अपृक्तस्य इति किम्। ऐधिष्ट। अभूताम्। २२२६ सिजभ्यस्तविदिभ्यश्च ३।४।१०९॥ सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात्। इति प्राप्ते। २२२७ आतः ३।४।११०॥ सिज्लुक्यादन्तादेव झेर्जुस् स्यात्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम। २२२८ न माङ्योगे ६।४।७४॥ अडाटौ न स्तः। मा भवान् भूत्। मा स्म भवत्। भूत्। २२२९ लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३।३।१३९॥ हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात्क्रियाया अनिष्पत्तौ गम्यमानायाम्।

स्य हलोऽस्य षष्ठ्या विपरिणाम इति भावः। ऐधीट् नेहेति। अनेन सूत्रेण अभूत् इत्यत्र ईडागमो नेत्यर्थः। कुत इत्यत आह—सिचो लुका लुप्तत्वादिति। विद्यमानत्वविशेषणेन लुप्तात्सिचः परस्य नेति भावः। एवं च अगादित्यादावपि लुप्तात्सिचः परस्य, अस्तेर्लुङि हलभूभावात्परस्य च नेत्युक्तप्रायम्। ऐधिषीति। एधधातोर्लुङि उत्तमपुरुषैकवचनम् इट्। अत्र इकारस्य सिचः परत्वेऽपि हल्त्वाऽभावात् ईडागमो नेति भावः। ऐधिष्टेति। एधधातोर्लुङि प्रथमपुरुषैकवचनम्। अत्र त इत्यस्य सिचः परत्वेऽपि एकाच्प्रत्ययत्वाऽभावेनाऽपृक्तत्वाऽभावात् ईडागमो नेति भावः। अभूताम्मिति। लुङस्तसि तस्य तामादेशः। च्लिः। सिच्। अट्। गुणनिषेधः। सिज्भ्यस्तविदि। झेर्जुसिति सूत्रमनुवर्तते। 'नित्यं ङितः' इत्यतः ङित इति च। तदाह—सिचोऽभ्यस्तादित्यादिना। इति प्राप्ते इति। 'लिङो झेर्जुसी'ति शेषः। आतः। 'झेर्जुस्' इति सूत्रमनुवर्तते। 'आतः सिज्लुगन्तादिति वक्तव्यमिति वार्तिकं भाष्ये पठितम्। तत्र सिज्लुकि यदाकारान्तं तस्मात्परस्य झेर्जुसिति लभ्यते। सिजभ्यस्तेति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम्। तदाह—सिज्लुक्यादन्तादेवेति। अभूवन्निति। झिः। च्लिः। सिच्। लुक्। अट्, झोऽन्तः। इतश्चेति इकारलोपः। तकारस्य संयोगान्तलोपः। 'भुवो वुग्लुङ्लिटो'रिति वुक्। सिज्लुकि आतः परस्यैवेति नियमात् सिजभ्यस्तेति न जुसिति भावः। अभूरिति। सिप् च्लिः सिच् लुक् अट् इकारलोपः। रुत्वविसर्गौ। अभूतमिति। थसस्तम् च्लिः सिच् लुक् अट्। गुणनिषेधः। एवं थस्य तादेशे अभूतेति रूपम्। अभूवमिति। मिप् अम्। च्लिः सिच्। लुक् अट् वुक्। अभूवेति। वस् च्लिः सिच् लुक् अट्। नित्यं ङित इति सकारलोपः गुणनिषेध। एवं मसि अभूमेति रूपम्। अथ माङि लुङि विशेषमाह—न माङ्योगे। शेषपूरणेन सूत्रं व्याचष्टे—अडाटौ न स्त इति। 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यतः 'आडजादीनामि'त्यतश्च, तदनुवृत्तेरिति भावः। मा भवान् भूदिति। मा भूदित्यत्र अडागमे सति असति च विशेषाऽभावात् भवत्पदस्य मध्ये प्रयोगः। अथ 'स्मोत्तरे लङ् चे'त्यस्य उदाहरति—मा स्म भवदिति। एवं बहुवचने मा स्म भवन् मा स्म भुवन्निति चोदाहरणं बोध्यम्। इति लुङ्प्रक्रिया। लिङ्निमित्ते। हेतुहेतुमद्भावादीति। हेतुहेतुमतोर्लिङ्, 'इच्छार्थेषु लिङ्लोटा'वित्यादि लिङ्निमित्तं लकार-

अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । २२३० ते प्राग्धातोः ।१।४।८०। ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः । २२३१ आनि लोट् ।८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि । 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' । दुःस्थितिः । दुर्भवानि । 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्' । अन्तर्धा । अन्तर्धिः । अन्तर्भवाणि । २२३२ शेषे विभाषाऽकखादावषान्त उपदेशे ।८।४।१८। उपदेशे कादिः खादिः षान्तश्च यो न भवति तस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात् ।

---

त्यर्थक्रियायां हस्तोऽभविष्यति । भविष्यत्यर्थे इति । 'भविष्यति मर्यादावचने' इत्यतः [illegible]स्यत्यनुवृत्तिरिति भावः । क्रियातिपत्तिपदं व्याचष्टे—क्रियाया अनिष्पत्ताविति । 'सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत्' इत्युदाहरणं बोध्यम् । अभविष्यदिति । लृङ् [illegible] इतश्चेतीकारलोपः । 'स्यतासी लृलुटो'रिति स्यप्रत्ययः । अट् । चकारान्तत्वात् [illegible] इट्, गुणावादेशौ । षत्वम् । अभविष्यतामिति । तसस्तामादेशः । स्यः । अट् । इट् । गुणावादेशौ । षत्वम् । अभविष्यन्निति । झि, स्य, अट्, इट्, गुणावादेशौ 'झोऽन्तः' इति झेरन्तादेशः इतश्चेतीकारलोपः । तकारस्य संयोगान्तलोपः । षत्वम् । अभविष्य इति सिप् । [illegible] स्य, अट्, इट् । गुणः । अवादेशः । इतश्चेतीकारलोपः । षत्वम् । रुत्वविसर्गौ । अभविष्यतमिति । थसस्तमादेशः । स्य, अट्, इट्, गुणादयः, षत्वम् । एवं थस्य तादेशादि पूर्ववत् । अभविष्यमिति । मिप् अम्, स्य, अट्, इट्, गुणादयः पूर्वरूपम् । षत्वम् । अभविष्यावेति । [illegible] वस्, स्य, अट्, इट्, 'नित्यं ङितः' इति सकारलोपः । अतो दीर्घः । षत्वम् । एवं मसि [illegible] अभविष्यामेति रूपम् । इति लृङ्प्रक्रिया । अथ प्रसङ्गादाह—ते प्राग्धातोः । त इत्यस्य वि[illegible]रणम्—गत्युपसर्गसंज्ञा इति । उपसर्गाः क्रियायोगे' 'गतिश्च' इति प्रकृतत्वादिति भावः । प्रागेवेति । न परतः नापि व्यवहिता इत्यर्थः । इह 'धातोः प्रागेव प्रयुज्यमाना गत्युपसर्गाः स्युः' इति संज्ञानियमपक्षोऽपि भाष्ये स्थितः । आनि लोट् । लोडिति आनीति च [illegible] लुप्तषष्ठीकं पदम् । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति च । तदाह—उपसर्गस्थान्निमित्तादिति । नेकपदा[illegible]

[illegible] सुप्र

[illegible] उप

[illegible] उपसर्गात्सुनोतीति षत्वं न भवति । दुर्भवानीति । अत्राऽऽनि लोडिति णत्वं न भवति । [illegible] स्थेति । अङ्विधौ किविधौ [illegible] कर्तव्ये अन्तर् इत्यस्य उपसर्गत्वमित्यर्थः [illegible] प्रादित्वाऽभावादप्राप्ते वचनम् । [illegible] न तर्धेति । क्रियामित्यधिकारे घाधातोः 'आतश्चोपसर्गे' इत्यङ् । टाप् । अन्तर्धिरिति । उपसर्गे घोः किः । अन्तर्भवाणीति । 'आनि लोट्' इति [illegible]त्वम् । शेषे विभाषा । अकखादा-

प्रणिभवति—प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥' इति ।

सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । 'यागात्स्वर्गो भवती'त्यादावुत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । सम्भवति । अनुभवति । अभिभवति । उद्भवति । परिभवतीत्यादौ विलक्षणार्थोऽवगम्यते । उक्तं च—

'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥' इति ।

एध २ वृद्धौ । कत्यन्ता षट्त्रिंशदनुदात्तेतः । २२१० ञित आत्मनेपदानां

---

विति स्थेत् । नेर्गदनदेति पूर्वसूत्रोक्तधातुभ्योऽन्य इति शेषः । तदाह—गदनदादेरन्यस्मिन्निति । ननु भावप्रकरणे संहिताधिकारस्थम् । तत्कथमविवक्षितायां संहितायाम् उपसर्गात्परत्वाऽभावात् णत्वाभावः । विवक्षितायां तु णत्वमिति विकल्पसिद्धेः किमिह विभाषाग्रहणेनेत्यत आह—इहोपसर्गाणामिति । उक्तमिति । हरिणेति शेषः । अत्र 'एकपदे' इत्यनेन अखण्डं पदं विवक्षितम् । 'नित्या समासे' इति लिङ्गात् । अखण्डत्वं च पदभिन्नोत्तरखण्डरहितत्वम् । अन्यथा 'शचीपतीत्यादौ अतो गुणे' इति बाधा पाक्षिकम् एकादेशः पक्षे न स्यात् । अर्थनिर्देशश्चेति । धातुपाठे 'भू सत्ताया'मित्याद्यर्थनिर्देश इत्यर्थः । उपलक्षणमिति । प्रदर्शनमात्रमित्यर्थः । अन्यथा—तदपरिसङ्ख्या कुतो न स्यादित्यत आह—यागादिति । नच 'यागात् स्वर्गो भवती'त्यादौ उत्पत्त्यादौ प्रयोगः कुतो न स्यादिति वाच्यम् । प्रयोगप्राचुर्यसत्त्वात् । पाणिनिर्हि धातुपाठे धातून् कांश्चिदर्थसहितान् कांश्चिदर्थरहितान् पठतीति 'भूवादयः' इति सूत्रभाष्ये स्थितम् । न चातिप्रसङ्गः शङ्क्यः । 'अनेकार्था अपि धातवो भवन्ती'ति भाष्ये अभिधानेन प्रयोगानुसारित्वावगतेः । सर्वेषु धातुष्वर्थनिर्देशस्त्वाधुनिक । एवं च 'सेधतेर्गतौ'इति सूत्रे गत्यादित्युपादानात् षिध गत्यामित्यर्थनिर्देशः अपाणिनीय एवेति दिक् । ननु भूधातो केवलस्योत्पत्त्याद्यर्थकत्वे उद्भवतीत्यादौ उपसर्गा व्यर्था इत्यत आह—उपसर्गास्त्विति । उपसर्गं विनापि भूधातोरुत्पत्त्याद्यर्थप्रतीतेः । 'उद्भवती'त्यादौ प्रयुज्यमाना अप्युपसर्गा द्योतका एव न तु वाचका इति भावः । द्योतकत्वे वा तेषां किमर्थं स्वीकार्यमित्यत आह—प्रभवतीत्यादिना । प्रभवः प्रकाशः उत्पत्तिः शक्तिर्वा । पराभवः पराजयः । सम्भवः—सम्भावना । अनुभवः उपभोगः । अभिभवः हिंसा । उद्भवः उत्पत्तिः । परिभवः तिरस्कारः । उक्तं चेति । हरिणेति शेषः । प्रहारः कशाद्याघातः । आहारो भक्षणम् । संहारः वधः । विहारः क्रीडा । परिहारः परित्यागः । इति भूधातुप्रक्रिया । एध वृद्धाविति । जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति षट् भावविकाराः । तत्र चतुर्थावस्था वृद्धिः उपचयः । कत्यन्ता इति । कत्थ श्लाघायामित्यन्ता इत्यर्थः । अनुदात्तेत इति । ततश्च एतेभ्य आत्मनेपदमेवेति भावः । तत्र एध् इत्यस्मात्

टेरे ३।४।७९॥ टितो लस्यात्मनेपदानां टेरेत्वं स्यात्। एधते। २२३४ सार्वधातुकमपित् १।२।४॥ अपित्सार्वधातुकं ङिद्वत्स्यात्। २२३५ आतो ङितः ७।२।८१॥ अतः परस्य ङितामाकारस्य इय् स्यात्। एधेते। एधन्ते। २२३६ थासः से ३।४।८०॥ टितो लस्य थासः से स्यात्। एधसे। एधेथे। एधध्वे। 'अतो गुणे' (६।१।९७)। एधे। एधावहे। एधामहे। २२३७ इजादेश्च गुरुमतोऽनृच्छः ३।१।३६॥ इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि। 'आमो मकारस्य नेत्वम्'। आस्कासोराम्विधानाज्ज्ञापकात्। २२३८ आमः २।४।८१॥

कर्तरि लटि तस्यात्मनेपदप्रथमपुरुषैकवचने तादेशे शपि एधत इति स्थिते—टित आत। टेः ए इति च्छेदः। लस्येत्यनुवृत्तम्। तदाह—टितो लस्येति। 'आदेशानामि' ति शेषः। आत्मनेपदत्वमत्र तद्वेव गृह्यते नत्वानोऽपि। तेन पचमानो यजमान इत्यादावेत्वं नेति भाष्ये स्पष्टम्। एधत इति। अत्र तकारादकारस्य व्यपदेशिवद्भावेन टित्वादेत्वम्। अथ लटः प्रथमपुरुषद्विवचने आतामित्यादेशे टित आत्मनेपदानामिति आम एत्वे शपि एध आते इति स्थिते ङित्कार्यं वक्ष्यन् ङित्त्वमाह—सार्वधातुकमपित्। 'गाङ्कुटादिभ्यः' इत्यतो ङिदित्यनुवर्तते। अपितो ङित्त्वशास्त्रं न सम्भवतीति ङिद्वदिति लभ्यते। तदाह—ङिद्वदिति। आतो ङित इति। ङित इत्यवयवषष्ठी। 'अतो येयः' इत्यस्मात् अत इति पञ्चम्यन्तम्, इय इति प्रथमान्तं चानुवर्तते। यकारादकार उच्चारणार्थः। तदाह—अतः परस्येति। ङितामित्यनन्तरम् अवयवस्येति शेषः। एधेते इति। एध आते इति स्थिते, आकारस्य इय्, 'आद्गुणः', 'लोपो व्योर्वली'ति यकारलोप इति भावः। एधन्त इति। प्रथमपुरुषबहुवचने झादेशे परे शपि अकारस्य अन्तादेशे पररूपे टेरेत्वमिति भावः। अथ लटो मध्यमपुरुषैकवचने थासादेशे कृते टित आत्मनेपदानामित्येत्वे प्राप्ते। थासः से। से इति लुप्तप्रथमाकम्। एधस इति। थासि शपि थासः सेभावः। एधेथे इति। लटो मध्यमपुरुषद्विवचने आथामादेशे शपि आम एत्वे आकारस्य इयादेशे गुणे यलोपे इति भावः। एधध्वे इति। लटो मध्यमपुरुषबहुवचने ध्वमादेशे शपि टेरेत्वे रूपम्। लट उत्तमपुरुषैकवचने इडादेशे एत्वे शपि एध ए इति स्थिते प्रक्रियां दर्शयति—अतो गुणे एधे। 'अतो गुणे' इति पररूपे वृद्ध्यपवादे कृते सति 'एधे' इति रूपमित्यर्थः। एधावहे इति। लट उत्तमपुरुषद्विवचने वहि इत्यादेशे टेरेत्वे शपि अतो दीर्घः। एधामहे इति। लट उत्तमपुरुषबहुवचने महि इत्यादेशे टेरेत्वे शपि अतो दीर्घः। गुरुमदिति उकारस्तदुप्रव्याहारार्थः। इति लट्प्रक्रिया। इजादेश्च। नञ् ऋच्छ इत्यनेन समासे अनृच्छ इत्यस्मात् पञ्चमी। 'धातोरेकाचः' इत्यतो धातोरित्यनुवर्तते। कास्प्रत्ययादित्यतः आमिति लिटीति चानुवर्तते। तदाह—इजादिरित्यादिना। आस्कासोरिति। 'कास्प्रत्ययादाममन्त्रे लिटी'ति, 'दयायासश्चे'ति च, कासधातोः आस्धातोश्च लिटि आम् वि-

आम: परस्य लुक् स्यात् । २२३९ कृञ्चानुप्रयुज्यते लिटि ३।१।४०॥ आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' (सू २२४० ) इति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते । तेन 'कृभ्वस्तियोगे—' ( सू २११७ ) इत्यत्र 'कृञो द्वितीय—' ( सू २१२९ ) इति प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः । तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां

---

हित । अत्र मकारस्य इत्संज्ञकत्वे 'मिदचोऽन्त्यात् परः' इति आकारादाकारान्तरं स्यात् । ततश्च सवर्णदीर्घे कृते कास् आस् इत्येव भवतीति आम्विधिर्व्यर्थः स्यात् । अत आमो मकारस्य नेत्संज्ञेति विज्ञायत इत्यर्थः । तथाच एधू आम् ऌ इति स्थिते- आम । 'मव्ये घसहरे त्यतः लेरिति 'ण्यचक्रियार्थेति' इत्यतः लुगिति चानुवर्तते । तदाह—आम परस्य लिति । मनेडमवधेयम् । 'कृन्मेजन्तः' इत्यत्र कृतो मान्तस्य एजन्तस्यमिति व्याख्याने एधामित्यादि वाऽव्ययं, लिः एव कृतत्वात्, तस्य च मान्तत्वाभावात् । तथाच प्रत्ययलक्षणेन कृदन्तत्वात् प्रातिपदिकत्वे स्वाद्युत्पत्तौ 'आम' इति लुक् । लेरिति [illegible] नानुवर्तते । मान्तं कृदन्तमव्ययमिति व्याख्याने तु प्रत्ययलक्षणेन कृदन्तत्वात् एधामिति मान्तमव्ययम् । ततः सुबुत्पत्तौ अव्ययादाप्सुप इति लुक् । 'आम' इत्यनेन तु परिशेषाल्लेरेव लुगिति लेरिति नानुवर्तनीयम् । 'आमः परस्य ले-रिति विवरणवाक्ये तु लेरिति स्पष्टार्थमेव । एव [illegible] एधामित्यस्य न 'ते' त पदद्वयम्' उभयथापि सुबन्तं पदमिति भाष्ये स्पष्टम् । इत्यात् । कास्प्रत्ययादामित्यतः आमि-त्यनुवृत्तं पञ्चम्या विपरिणम्यते । प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते । लिटि परे यः कृञ् स अनुप्रयुज्यत इत्यन्वयः । फलितमाह—आमन्ताल्लिट्परा इति । लिट्शिरस्का इत्यर्थः । कृभ्वस्तय इति । कृञित्यनेन कृभ्वस्तीनां ग्रहणमिति भावः । अनुप्रयुज्य-न्त इति । आमन्तादनुपश्चादव्यवहिताः प्रयुज्यन्त इत्यर्थः । 'विपर्यासनिवृ-त्त्यर्थं व्यवहितनिवृत्त्यर्थं चेति वार्तिकात् भाष्याच्च । एवं च 'तं पातयां प्रथममास पपात पश्चात्' 'प्रभ्रंशयां यो नहुषं चकार' इत्यादिप्रयोगाः प्रामादिका एव । धा-तोराम् स्यात्, कृञ्चानुप्रयुज्यत इत्युक्तसमुच्चयार्थश्चकारः । ननु कृञ एवाऽनुप्रयोग श्रवणात् कथं भ्वस्त्योरप्यनुप्रयोग इत्यत आह—आम्प्रत्ययवदित्यादिना । 'कृञ्चानुप्रयु-ज्यते' इत्यत्र कृञ एवस्यैवानुप्रयोगविधौ सति 'आम्प्रत्ययवद' दिति सूत्रे अनुप्रयु-ज्यमानस्याम्प्रत्ययस्य कृञ इति विशेषणं व्यर्थं स्यात् । धात्वन्तरस्यानुप्रयोगाऽप्रसक्ते: । ततश्च कृञ इति विशेषणादन्यस्यापि अनुप्रयोगो विज्ञायत इत्यर्थः । ननु कृञोऽन्य-स्याप्यनुप्रयोगो विज्ञापतो, भ्वस्त्योरपीत्येव कुत आयातमित्यत आह कृञ्ग्रहणेनेत्यर्थं । प्रत्याहाराश्रयणादिति । एतच्च भाष्ये स्पष्टम् । मानानां कृभ्वस्तीनां आम्प्रकृतिभूतानां च कथमन्वय इत्यत आह भेदेनान्वय इत्यन्तेन । सामान्यविशेषयोरभेदान्वयस्य न्याय्यत्वादिति

विशेषवाचित्वात्तदर्थयोरभेदेनान्वयः । सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते । कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते । २२४० आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १।३।६३ ॥ आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् ।

---

इव स्वरत्योरपि क्रियासामान्यवाचित्वात् धातूनामनेकार्थत्वादिति शेषम् । ननु 'कृभ्वस्तियोगे' इत्यस्य कृञो द्वितीयस्यास्य च सूत्रस्य मध्ये 'अभिविधौ सम्पदा च' इति पठितम् । एवं च कृञ्प्रत्याहारे सम्पदोऽपि कुतो न ग्रहणमित्यत आह—सम्पदिस्त्विति । अनन्वितार्थत्वादिति । विवक्षितस्य वस्तुनो रूपान्तरापत्तिः सम्पद्यर्थः । एधाञ्चधातोस्त्वाम्प्रकृतिभूतस्य वृद्ध्यादिरर्थः । तयोरुभयोरपि विजातीयत्वेन सामान्यविशेषभावाऽभावेन अभेदान्वयाऽसम्भवादित्यर्थः । अत एव कृभ्वस्तीनां ग्रहणमिति भाष्यं सङ्गच्छत इति भावः । ननु आम्प्रत्ययवदिति कृञ आत्मनेपदविधायकसूत्रं वचनमिदं व्यर्थम् । 'स्वरितञितः' इत्येव सिद्धेरित्याशङ्क्याह—कृञस्त्विति । आम्प्रत्ययवत्कृञ । अनुदात्तङित इत्यत आत्मनेपदमित्यनुवर्तते । तत्राम्प्रत्ययस्यात्मनेपदाऽभावादाह—आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिरिति । तस्य अन्यपदार्थस्य गुणा विशेषणानि अवयवपदार्थरूपाणि, तेषां संविज्ञानं क्रियान्वयितया ज्ञानं न विद्यते यस्य बहुव्रीहेः सः अतद्गुणसंविज्ञानः । यथा चित्रगुमानयेति । अत्र हि पुरुषस्यैवान्यपदार्थस्य क्रियान्वयः । न तु चित्राया गवामपि । तथा च प्रकृते आम्प्रत्ययमित्युक्ते आम्प्रत्ययप्रकृतिभूत एधादिधातुरेव आम्प्रत्ययशब्देन गृह्यत इति भावः । 'आम्प्रत्ययवत्' इति तृतीयान्ताद्वतिः । अनुप्रयुज्यत इत्यनुप्रयोगः । कर्मणि घञ् । पञ्चम्यर्थे षष्ठी । तदाह—आम्प्रकृत्येत्यादिना । आम्प्रकृतेर्भवितुं योग्यं यदात्मनेपदं तत् अनुप्रयुज्यमानात् कृञोऽपि स्यादिति भावः । अत्र न प्रत्याहारग्रहणम् । 'अनुप्रयोगस्येत्येव सिद्धे कृञ्ग्रहणादिह न प्रत्याहारग्रहण'मिति भाष्यम् । परस्मैपदिष्वपि क्रियाफले कृञ्धातोरात्मनेपदार्थोऽयमारम्भः । इन्दाञ्चकारेत्यादौ तु परगामिनि क्रियाफले नाऽऽत्मनेपदम् । आम्प्रकृतेः 'इदि परमैश्वर्ये' इति धातोरात्मनेपदाऽभावात् तस्य परस्मैपदित्वात् । एतदर्थमेव आम्प्रत्ययवदित्युपात्तम् । किंच ईहाञ्चक्रे इत्यादौ अनेनैव सूत्रेण परगामिनि क्रियाफले आत्मनेपदम् । आत्मगामिनि तु क्रियाफले 'स्वरितञितः' इत्यात्मनेपदं दुर्वारम् । अस्य सूत्रस्य एधाञ्चक्रे इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याऽप्राप्तस्य विधान एव समर्थनया आत्मगामिनि क्रियाफले 'स्वरितञितः' इति प्राप्तस्यात्मनेपदस्य निवारणे सामर्थ्याभावादित्यत आह—एवेति । इह आम्प्रत्ययवत् कृञोऽनुप्रयोगस्येति सूत्रे 'पूर्ववत्सनः' इति पूर्वसूत्रात् पूर्ववदित्यनुवर्त्य 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्ये'त्येकं वाक्यं, 'पूर्ववत् कृञोऽनुप्रयोगस्ये'ति अन्यद्वाक्यमिति, वाक्यद्वयं सम्पाद्यम् । तत्र पूर्ववदिति

पूर्ववत् इत्यनुवर्त्य वाक्यभेदेन सम्बध्यते। पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति। तेन कर्त्रगेऽपि फले इन्दाञ्चकारेत्यादौ न तङ्। २२४१ लिटस्तझयोरेशिरेच् ३।४।८१॥ लिडादेशयोस्तझयोः एश् इरेच् एतौ स्तः। एकारोच्चारणं ज्ञापकं 'तङादेशानां टेरेत्वं न' इति। तेन दाधारेसां न। कृ ए इति स्थिते। २२४२ असंयोगाल्लिट् कित् १।२।५॥ असंयोगात्परोऽपिल्लिट् कित्स्यात्। 'क्ङिति च' (सू २२१७) इति निषेधात् 'सार्वधातुकार्धधातुकयोः' (सू २१६८) इति गुणो न। द्वित्वात्परत्वाद्यणि प्राप्ते। २२४३ द्विर्वचनेऽचि १।१।५९॥ द्वित्वनिमित्तेऽ-

---

तृतीयान्ताद्वतिः। पूर्वेण—पूर्वप्रयुक्तेन एधादिधातुना तुल्यमित्यर्थः। तत्र वाक्यद्वयस्य समानार्थत्वे वैयर्थ्याद् द्वितीयं वाक्यं नियमार्थं सम्पद्यते। पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति। एवं च पूर्ववाक्येन एधाञ्चक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले 'स्वरितञितः' इत्यात्मनेपदस्य निवृत्तिः फलति। तदाह—तेनेति। द्वितीयवाक्येनेत्यर्थः। न तङिति। न आत्मनेपदमित्यर्थः। एध धातुमनुप्रयुज्यमानात्कृञः लिटस्तङि प्रथमपुरुषैकवचने तादेशे एधाम् कृ त इति स्थिते। लिटस्तझयोरेशि। ननु लिटस्तझयोरिशिरिजित्येवास्तु। आदेशयोरेकारोच्चारणं व्यर्थम्। टित आत्मनेपदानामित्येत्वेनैव सिद्धेरित्यत आह—एकारोच्चारणमिति। ज्ञापकस्य फलमाह—तेन दाधारेसां नेति। दा रो रस् एषां लुडादेशभूतात्मनेपदादेशानां टेरेत्वं नेत्यर्थः। वस्तुतस्तु परत्वादेत्वे कृते पुनः प्रसङ्गविज्ञानेन डादिषु कृतेषु लक्ष्ये लक्षणस्येति न्यायात् एत्वं नेति लुटः प्रथमस्येति सूत्रभाष्ये स्पष्टम्। कृ ए इति स्थिते इति। तकाराकारसङ्घातस्य एकारः शित्त्वात् सर्वादेश इति भावः। असंयोगाल्लिट्। अपिदिति। सार्वधातुकमपिदित्यतस्तदनुवृत्तेरिति भावः। सार्वधातुकमपिदिति ङित्त्वं तु नात्र प्रवर्तते। लिडादेशाभामार्धधातुकत्वादिति बोध्यम्। कित्त्वस्य फलमाह—क्ङिति चेति। द्वित्वादिति। कृ ए इति स्थिते लिटि धातोरिति द्वित्वात् परत्वात् इको यणचीति ऋकारस्य यणादेशे रेफे प्राप्ते सतीत्यर्थः। कृते तु यणि एकाच्त्वाभावात् लिटि धातोरिति द्वित्वं न स्यादिति भावः। द्विर्वचनेऽचि। द्विरुच्यते येन परनिमित्तेन तत् द्विर्वचनं द्वित्वनिमित्तमिति यावत्। अचीत्यस्य विशेषणमिदम्। 'अचः परस्मिन्पूर्वविधौ' इत्यतः अच इति 'स्थानिवदादेशः' इत्यतः आदेश इति च पदाम्चेत्यतः नेति चानुवर्तते। द्विर्वचन इत्यावर्तते। एवं च द्वित्वे कर्तव्ये सतीत्यपि लभ्यते। तदाह—द्वित्वनिमित्ते अचीत्यादिना। द्वित्वे कर्तव्ये सतीत्युक्तेः कृते द्वित्वे चक्रे इत्यादौ यणादयो भवन्ति। अन्यथा तु न स्युः। द्वित्वनिमित्तस्य अचः सत्त्वात्। द्वित्वनिमित्त इति किम्। दुद्यूषति। दिव् धातोः सनि द्वित्वात्परत्वात् ऊठि कृते द्वित्वात्प्राग्यण् भवत्येव। तथा च द्यू इत्यस्य द्वित्वे दुद्यूषतीति सिध्यति। द्वित्वे कर्तव्ये यणो निषेधे तु दिद्यूषतीत्यभ्यासे इकार एव श्रूयेत।

चि परे अच आदेशो न स्याद् द्वित्वे कर्तव्ये । २२४४ उरत् ७।४।६६॥ अभ्यासऋवर्णस्यात्स्यात्प्रत्यये परे । रपरत्वम् । 'हलादिः शेषः' ( सू २१७९ ) । प्रत्यये किम् । वव्रश्च । २२४५ कुहोश्चुः ७।४।६२॥ अभ्यासकवर्गहकारयोश्चवर्गादेशः

---

न तु कारः । द्वित्वनिमित्ते इत्युक्तौ तु अचि परे द्वित्वात् प्राक् यणो न निषेधः । उत्तो द्वित्वनिमित्तत्वाभावात् । अचीति किम् । जेघ्रीयते । अत्र घ्राधातोर्यङि द्वित्वात् प्राक् 'ई घ्राध्मोः' इति ईकारादेशो न निषिध्यते । ईत्वस्य द्वित्वनिमित्तयङ्निमित्तकत्वेऽपि द्वित्वनिमित्ताज्निमित्तकत्वाभावात् । अचः किम् । असुषुपत् । इह स्वापेः चङि द्वित्वात् प्राक् 'स्वापेश्चङि' इति वकारस्य सम्प्रसारणं न निषिध्यते । तस्याजादेशत्वाभावात् । तस्मिन् कृते सम्प्रसारणे सुप् इत्यस्य द्वित्वे अभ्यासे उकारस्य श्रवणं सम्भवति । सम्प्रसारणे निषिद्धे तु स्वप् इत्यस्य द्वित्वे अभ्यासे उकारो न श्रूयेत । एवं च प्रकृते यणादेशात् प्राक् लिटि धातोरिति द्वित्वे कृ कृ अ इति स्थिते—उरत् । उः अत् इति छेदः । ऋ इत्यस्य उरिति षष्ठ्येकवचनम् । 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनुवर्तते । अङ्गस्येत्यधिकृतम् । तदाक्षिप्तः प्रत्यये परत एव अङ्गसंज्ञाविधानात् । तदाह—अभ्यासऋवर्णस्येत्यादिना । रपरत्वमिति । अभ्यासऋवर्णादेशस्याकारस्योरण् रपर इति रपरत्वमित्यर्थः । तथा च कर् कृ अ इति स्थिते । हलादिः शेषः इति । रेफस्य निवृत्तिरिति भावः । प्रत्यये किमिति । अङ्गेनैव प्रत्ययस्याक्षिप्तत्वात् प्रत्यये परत इति किमर्थमित्यर्थः । वव्रश्चेति । 'ओ व्रश्चू' छेदने, लिटि णल् द्वित्वं लिट्यभ्यासस्येति अभ्यासरेफस्य सम्प्रसारणं ऋकारः । उरत् । रपरत्वम् । हलादिः शेषः । वव्रश्चेति रूपम् । अत्र अभ्यासऋवर्णस्येति रेफस्थानिकस्य सम्प्रसारणस्य यः ऋदवयवसम्पन्नः अकारः तस्य अचः परस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणतया तस्मिन् परे वकारस्य 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधात् सम्प्रसारणमिति स्थितिः । उदाहृतिरत्र 'प्रत्यये परतः' इत्यनुक्तौ तु सम्प्रसारणभूतऋकारस्थानिकस्य अकारस्य तन्निमित्तकत्वाभावेन स्थानिवत्त्वाप्रसक्तेः सम्प्रसारणत्वाभावात्तस्मिन् परतो 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधो न स्यादिति भावः । एवं च क कृ अ इति स्थिते—कुहोश्चुः । कु ह इत्यनयोर्द्वन्द्वात् षष्ठीद्विवचनम् । 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनुवर्तते । तदाह—अभ्यासेति । यद्यपि स्थानिनां कवर्गीयाणां हकारस्य च षट्त्वात् चवर्गीयाणां पञ्चत्वाच्च यथासङ्ख्यम्, नापि स्थानत आन्तर्यम्, कण्ठतालुस्थानभेदात् । आभ्यन्तरप्रयत्नसाम्यं तु कवर्गचवर्गयोरविशिष्टम् । हकारचवर्गयोस्तु नान्तर्येण सत् । अतो बाह्यप्रयत्नत एवान्तर्यमिह व्यवस्थापकमाश्रयणीयम् । तत्र प्रथमस्य कवर्गीयस्य प्रथम एव चवर्गीयो भवति, अघोषश्वासविवाराल्पप्राणप्रयत्नसाम्यात् । न तु द्वितीयः, महाप्राणत्वात् । नापि तृतीयपञ्चमौ, घोषसंवारनादप्रयत्नत्वात् । नापि चतुर्थः, घोषसंवारनादमहाप्राणप्रयत्नत्वात् । तथा द्वितीयस्य

ताम्। २२५८ आत्मनेपदेष्वनतः ७।१।५॥ अनकारात्परस्यात्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' (सू २२४७)। ऐधिढ्वम्। इड्भिन्नादेव इणः 'गृह्यते' इति मते तु ऐधिध्वम्। ढधयोर्वस्य मस्य च द्वित्वविकल्पात्षोडश रूपाणि। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्य-

---

आत्मनेपदेष्वनतः। झोऽन्त इत्यन्तादेशे प्राप्ते—आत्मनेपदेषु। 'झोऽन्तः' इत्यतः झ इति षष्ठ्यन्तमनुवर्तते। 'आत्मनेपदेष्विति षष्ठ्यर्थे सप्तमी। आत्मनेपदावयवस्य झकारस्येति लभ्यते। 'अदभ्यस्तात्' इत्यतः अदित्यनुवर्तते। न अत् अनत्। तस्मादिति विग्रहः। तदाह—अनकारात्परस्येत्यादिना। ऐधिषतेति। आत्मनेपदावयवझकारस्य अत् इत्यादेशः। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्। ऐधिष्ठा इति। थासः च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वं थकारस्य ष्टुत्वेन ठकारः। रुत्वविसर्गौ। ऐधिषाथामिति। आथाम्। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्। अथ ध्वमो धस्य ढत्वं स्मारयति—इण षीध्वमिति। ऐधिढ्वमिति। ध्वम्। च्लिः। सिच्। इट्। आट्। वृद्धिः। 'धि च' इति सस्य लोपः। 'इणः षीध्व'मिति धकारस्य ढत्वम्। इटः इणः सिज्व्यवधाने सिजन्ताङ्गावयवत्वेन इडन्तस्य इणन्ताङ्गत्वादिति भावः। इड्भिन्न इति। 'विभाषेटः' इत्यत्र इड्ग्रहणात् पूर्वसूत्रे 'इणः षीध्व'मित्यत्र इड्भिन्न एव इण् गृह्यत इति कश्चिदाहुः। तन्मते तु प्रकृते इटः परत्वात् धकारस्य ढत्वाभावे ऐधिध्वमित्येव रूपमित्यर्थः। इदं तु मतान्तरं भाष्याऽनारूढमिति सूचयितुं तुशब्दः। ढधयोरिति। मतभेदमाश्रित्येदम्। तत्र ढत्वाभावपक्षे धकारस्य 'अनचि च' इति द्वित्वविकल्पात् द्विधमेकधमिति रूपद्वयम्। एवं ढत्वे द्विढम्, एकढमिति रूपद्वयम्। रूपचतुष्टयेऽपि 'यणो मयो द्वे वाच्ये' इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारि रूपाणि भवन्ति। तथा च अष्टौ रूपाणि सम्पन्नानि। मकारस्य द्वित्वविकल्पादुक्तान्यष्टौ रूपाणि एकमकाराणि द्विमकाराणि चेति षोडश रूपाणि सम्पन्नानीत्यर्थः। ऐधिषीति। लुङ इडादेशः। च्लिः। सिच्। इडागमः। आट्। वृद्धिः। वहिमहोस्तु वलेः सिचि इडागमे आटि वृद्धौ, ऐधिष्वहि, ऐधिष्महीति रूपे। इति लुङ्प्रक्रिया। ऐधिष्यतेति। लृङः तादेशः। स्य। इट्। आट्। वृद्धिः। षत्वम्। ऐधिष्येतामिति। आताम्। स्य। इट्। आकारस्य इय्। आद्गुणः। यलोपः। आट्। वृद्धिः। षत्वम्। ऐधिष्यन्तेति आत्मनेपदझकारस्यान्तादेशः। स्य। इट्। आट्। वृद्धिः। षत्वम्। ऐधिष्यथा इति। थास्। स्य। इट्। आट्। वृद्धिः। रुत्वविसर्गौ। ऐधिष्येथामिति। आथाम्। स्यः। इट्। आकारस्य इय्। आद्गुणः। यलोपः। आट्। वृद्धिः। षत्वम्। ऐधिष्यध्वमिति। ध्वम्। स्य। इट्। आट्। वृद्धिः।

